- खण्ड–मुक्तक–कोश–काव्यानि सर्वाण्यपि लघुकाव्यानि इति कथ्यन्ते ।
- ‘गीतिकाव्यानि’ इति एषां नामान्तरमपि अस्ति ।
- आधुनिकप्रबन्धेषु गज़ल्, हयिकु, खवालि, इत्यादयः एषु एव अन्तर्भवन्ति ।

# (i) खण्डकाव्यम्

- ‘खण्डकाव्यं भवेत्काव्यस्यैकदेशानुसारि च’ ।
- काव्यरूपस्य अस्य दूतकाव्यं, सन्देशकाव्यम्, इत्यादिरूपभेदेषु अपि ज्ञायते ।
- इदं काव्यरूपं महाकाव्यस्य किञ्चन अंशरूपम् अनुसरति ।
- इतिवृत्तं प्रख्यातं वा काल्पनिकं वा भवतु ।

Contd….

- सत्पुरुषाश्रितमेव भवेत् ।
- कस्यचित् जीवनस्य चरित्रस्य वा नैकेषु विषयेषु कमपि एकम् अंशं खण्डीकृत्य कविः अभिवर्णयति ।
- उदा – ऋतुसंहारः, मेघदूतं, लहरीकाव्यं, चण्डीशतकं, सूर्यशतकं, गीतगोविन्दं, इत्यादीनि ।

# (ii) मुक्तककाव्यम्

- ‘छन्दोबद्धपदं पद्यं तेन मुक्तेन मुक्तकम् ।’
- मुक्तककाव्यं कस्यचिदंशस्य अनुभूतिर्वा कल्पना वा उत भावो वा प्ररूपयति ।
- उदा – भर्तृहरेः शतकत्रयम् ।

# (iii) कोषकाव्यम्

कोषः श्लोकसमूहस्तु स्यादन्योन्यानपेक्षकः ।
व्रज्याक्रमेण रचितः स एवातिमनोरमः ।।

उदा – अमरकोषः, हलायुधकोषः, विश्वकोषः,
वैजयन्तीकोषः, मेधिनीकोषः,वाचस्पत्यं,
शब्दकल्पद्रुमः, इत्यादयः ।

# आधुनिकप्रबन्धाः

- गज़ल् ।
- हयिकु ।
- खवालि ।

# महाकाव्य-खण्ड-काव्ययोः भेदाः –

- महाकाव्यं कस्यचित् जीवनस्य नैकरूपतां व्यनक्ति । खण्डकाव्यं कस्यचित् जीवनस्य नैकेषु विषयेषु कमपि एकम् अंशं खण्डीकृत्य अभिवर्णयति ।
- महाकाव्यानाम् आकारः बृहत्, विशालकायः भवति । खण्डकाव्यानाम् आकारः लघुः भवति ।
- आदर्शचित्रणं, युगधर्मबोधनं इत्यादयः महाकाव्यानाम् इतिवृत्तस्य अंशाः भवन्ति । खण्डकाव्यानां सहजसामाजिकवस्तुचित्रणं प्रधानरूपेण भवति ।

Contd……

- महाकाव्यानां सर्गेषु वृत्तवैविध्यं भवति । खण्डकाव्यानि प्रायशः एकवृत्तात्मकं भवन्ति ।
- महाकाव्येषु भाषा क्लिष्टा । खण्डकाव्येषु भाषा सरला, सरसा, ललिता, स्यात् ।
- महाकाव्येषु दीर्घसमासशब्दाः भवन्ति । खण्डकाव्येषु लघुसमासाः भवन्ति ।
- महाकाव्येषु क्लिश्टालङ्काराः भवन्ति । खण्डकाव्येषु अलङ्काराः सामान्याः भवन्ति ।
- महाकाव्येषु रसविस्तरणं भवति । रतिपुष्टिः अत्र निश्चयेन भवति किन्तु रसविस्तरस्य अवकाशः अत्र नास्ति ।

